# श्री सूक्त विधानम्

आदौ गणपतिं आवाहयामि, स्थापयामि, पूजयामि ।

कुंदेंदु धवळाकारं पूर्ण चंद्र विभाननाम् ।
स्वर्गापवर्ग फलदां वंदे माहेश्वरीं सदाम् ॥
गौरीं सुवर्णवर्णाभां स्वर्ण पद्म सुवासिनीम् ।
पाशांकुशधरां भूतिधरांच शिववल्लभाम् ॥

आदौ गौर्यावाहनम्

ॐ गौरिमिमाय सलिलानि तक्षत् ऐकपदि द्विपदि सा चतुष्पदि
अष्टापदि नवपदि भभूवुशि सहस्राक्षर परमेव्योमन्

गौरीं सांगां सायुधां सवाहनां सपरिवाराम्
आवाहयामि, स्थापयामि, पूजयामि

ततः कामेश्वरी आवहनम्

सर्व देवाधि देवेभ्य आविर्भूत अमितप्रभा ।
त्रिगुणात्मा महादेवी पुत्रपौत्र प्रवर्तनी ॥

अन्नपूर्णे सदा पूर्णे शंकर प्राण वल्लभे ।
ज्ञान वैराग्य सिध्यर्थं भिक्षां देही च पार्वति ॥

कामेश्वरीं सांगां सायुधां सवाहनां सपरिवाराम्

आवाहयामि, स्थापयामि, पूजयामि

महालक्ष्मी आवाहनं

करद्वयेन कमलॆ धारयंती स्वलीलया
हारनूपुर संयुक्तां लक्ष्मीं दॆवीं नमाम्यहम्

ओं श्रीं ह्रीं ऐं आद्यादि श्री महालक्ष्मी कमल धारिण्यै सिंह वाहिन्यै स्वाहा

लक्ष्मीं सांगां सायुधां सवाहनां सपरिवाराम्
आवाहयामि, स्थापयामि, पूजयामि

महाकाळ्यावाहनम्

ऎषासा वैष्णवीमाया महाकाळि दुरत्यया
आराधीतावशी कुर्यात् पूजा कर्तुष्चराचरम्

जयंति मंगळा काळी भद्र काळी कपालिनि
दुर्गा क्षमा शिवा धात्रि स्वाहा स्वधा नमॊस्तुतॆ

काळीं सांगां सायुधां सवाहनां सपरिवारां
आवाहयामि, स्थापयामि, पूजयामि

महासरस्वत्यावाहनम्

शारदा शारदांभोज वदना वदनांबुजे
सर्वदा सर्वदास्माकं सन्निधिं क्रियात्
प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥

सरस्वतीं सांगां सायुधां सवाहनां सपरिवाराम्
आवाहयामि, स्थापयामि, पूजयामि

ततः कुलदेवता आवाहनम्

स्वाहां आवाहयामि
स्वधां आवाहयामि
पुष्टिं आवाहयामि
तुष्टिं आवाहयामि
आत्मनः कुलदेवतां आवाहयामि
शोभन देवतां आवाहयामि
मंत्रोक्त देवतां आवाहयामि

अथ कळान्यास क्रमः

अस्य श्री कळात्मिक वर्ण जननी
शारदा मातृका सरस्वती महामंत्रस्य
ब्रह्मा ऋषिः
गायत्री छंदः
कळात्मिका वर्ण जननी शारदा मातृका सरस्वती देवता
हलो बीजानि
स्वराशक्त्यः
बिंदवः कीलकं

कळात्मक वर्ण जननी

शारदा मातृका सरस्वती श्रीबालात्रिपुरसुंदरी प्रसादसिद्ध्यर्थे जपे विनियोग:

अं आं अंगुष्ठाभ्यां नम:
इं ईं तर्जनीभ्यां स्वाहा
उं ऊं मध्यमाभ्यां वषट्
एं ऐं अनामिकाभ्यां हुं
ओं औं कनिष्ठिकाभ्यां औषट्
अं अ: करतल करपृष्ठाभ्यां फट्
ऐवं हृदयादिन्यास:

ध्यानम्

हस्तै पद्मं रथांगं गुणमत हरणीं पुस्तकम्
वर्णमालां टंकं शुभ्रं कपालं दरममृतल सत् हेमकुंभंवहंतीम्
मुक्ता विद्युत्पयोद स्फटिकमणि निभां बंधुकां पंचवक्त्राम्
त्र्यक्ष्णां वक्षोज निम्नां सकल शशिनिभां भारतीं त्वां नमामि

निवृत्तिंच प्रतिष्ठाच विद्यां शांतिंच इंदिराम्
दीपिकां रेचकां मोचीं परां सूक्ष्मां ततामृताम्
ज्ञानामृताप्यायनीच व्यापिनी व्योमरूपिणी
अनंतसृष्टिं रुधिरां स्मृतिंमेधां च शांतिकाम्

लक्ष्मी द्युति स्थिति स्थिरा सिद्धि जराचपालिनि
शांति ईश्वरिनामानि रतिकामिनि वरदा

ह्लादिनी प्रीतिदीर्घाच तीक्ष्णौ रौद्राभयाकळा
निद्रा तंद्रि क्षुधा क्रोध क्रिया मुद्ना किनितथा

मृत्युपीता श्वेत अरुण असितानंतनामक कळान्यास इति प्रोक्तम्
सर्वांगव्यापिनी स्पृशेत्

ॐ ऐं क्लीं सौः ओं अं निवृत्तिकळायै नमः शिरसि
ॐ ऐं क्लीं सौः ओं आं प्रतिष्ठा कळाय नमः मुखे
ॐ ऐं क्लीं सौः ओं इं विद्या कळायै नमः दक्षिणनेत्रे
ॐ ऐं क्लीं सौः ओं ईं शांतिकळायै नमः वामनेत्रे
ॐ ऐं क्लीं सौः ओं उं इंदिराकळायै नमः दक्षिणकर्णे
ॐ ऐं क्लीं सौः ओं ऊं दीपिकाकळायै नमः वामकर्णे
ॐ ऐं क्लीं सौः ओं ऋं रेचका कळायै नमः दक्षिणनासापुटे
ॐ ऐं क्लीं सौः ओं ॠं मोचिका कळायै नमः वामनासापुटे
ॐ ऐं क्लीं सौः ओं ळुं परा कळायै नमः दक्षिणकपोले
ॐ ऐं क्लीं सौः ओं ळूं सूक्ष्मा कळायै नमः वामकपोले
ॐ ऐं क्लीं सौः ओं एं सूक्ष्मा कळायै नमः ऊर्ध्वोष्ठे
ॐ ऐं क्लीं सौः ओं ऐं अमृत कळायै नमः अधरोष्ठे
ॐ ऐं क्लीं सौः ओं ओं आप्यायनी कळायै नमः ऊर्ध्व दंत पंक्तौ
ॐ ऐं क्लीं सौः ओं औं व्यापिनी कळायै नमः अधो दंत पंक्तौ
ॐ ऐं क्लीं सौः ओं अं व्योम कळायै नमः शिरोवृत्ते
ॐ ऐं क्लीं सौः ओं अः अनंत कळायै नमः शिखायां

ॐ ईशानः सर्व विद्यानां ईश्वरः सर्व भूतानां
ब्रह्मादिपतिर् ब्रह्मणोदिपतिर् ब्रह्म
शिवोमे अस्तु सदा शिवोम्

इति जीवकळां संपूज्य

ॐ ऐं क्लीं सौः ओं कं सृष्टि कळायै नमः दक्षिणबाहुमूले
ॐ ऐं क्लीं सौः ओं खं रुधिरा कळायै नमः दक्षिणबाहुकूर्परे
ॐ ऐं क्लीं सौः ओं गं स्मृति कळायै नमः दक्षिणप्रकोष्ठे
ॐ ऐं क्लीं सौः ओं घं मेधा कळायै नमः दक्षिणमणिबंधे
ॐ ऐं क्लीं सौः ओं ङं शांति कळायै नमः दक्षिणकरांगुळ्यगे
ॐ ऐं क्लीं सौः ओं चं लक्ष्मी कळायै नमः वामबाहुमूले
ॐ ऐं क्लीं सौः ओं छं द्युति कळायै नमः वामकूर्परे
ॐ ऐं क्लीं सौः ओं जं स्थिति कळायै नमः वामप्रकोष्ठे
ॐ ऐं क्लीं सौः ओं झं स्थिरा कळायै नमः वाममणिबंधे
ॐ ऐं क्लीं सौः ओं ञं सिद्धि कळायै नमः वामकरांगुळ्यग्रे

ब्रह्मादेवानां पदवीः
कवीनां ऋषि र्वि प्राणां महिषो मृगाणाम्
श्येनो घ्रुध्राणां स्वधितिर्व सानां सोमः पवित्र मत्येति रेभन्

इति ब्रह्मकळां संपूज्य

ॐ ऐं क्लीं सौः ओं टं ओं जरा कळायै नमः दक्षिण जघ्ने
ॐ ऐं क्लीं सौः ओं ठं पाळिनि कळायै नमः दक्षिण जानु नमः
ॐ ऐं क्लीं सौः ओं डं शांति कळायै नमः दक्षिण गुल्भे
ॐ ऐं क्लीं सौः ओं ढं ईश्वर कळायै नमः दक्षिण पादे
ॐ ऐं क्लीं सौः ओं णं रति कळायै नमः दक्षिण पादां गुल्यग्रे
ॐ ऐं क्लीं सौः ओं तं कामिनी कळायै नमः वाम जघ्ने
ॐ ऐं क्लीं सौः ओं थं वरदा कळायै नमः वाम जाह्नुनी

ॐ ऐं क्लीं सौः ऑं दं ह्लादिनी कळायै नमः वाम गुल्भे
ॐ ऐं क्लीं सौः ऑं धं प्रीति कळायै नमः वाम पादे
ॐ ऐं क्लीं सौः ऑं नं दीर्घा कळायै नमः वामपदांगुळ्यग्रे

इदं विष्णुर्विचक्रमे त्रेधानि दधे पदम्
समूह्ळमस्यपांसुरे इति विष्णुकळां संपूज्य

ॐ ऐं क्लीं सौः ऑं पं तीक्ष्णा कळायै नमः दक्षिणकटि पार्श्वे
ॐ ऐं क्लीं सौः ऑं बं भया कळायै नमः पृष्ठे
ॐ ऐं क्लीं सौः ऑं भं निद्रा कळायै नमः नाभौ
ॐ ऐं क्लीं सौः ऑं मं त्रंदी कळायै नमः हृदये
ॐ ऐं क्लीं सौः ऑं यं क्षुधा कळायै नमः दक्षिण स्तने
ॐ ऐं क्लीं सौः ऑं रं क्रोध कळायै नमः वाम स्तने
ॐ ऐं क्लीं सौः ऑं लं क्रिया कळायै नमः ककुदि
ॐ ऐं क्लीं सौः ऑं वं उद्गारिणी कळायै नमः दक्षिण कुक्षौ
ॐ ऐं क्लीं सौः ऑं शं मृत्यु कळायै नमः वाम कुक्षौ

कद्रुद्राय प्रचेतसे मीढुष्ठमायतव्यसे
ओचेम शंतमं हृदे

इति रुद्रकळां संपूज्य

ॐ ऐं क्लीं सौः ऑं षं पीता कळायै नमः हृदयादि दक्षिण कर्णांतं न्यसेत्
ॐ ऐं क्लीं सौः ऑं सं श्वेता कळायै नमः हृदयादि वाम कर्णांतं न्यसेत्

ॐ ऐं क्लीं सौः ऒं हं अरुणा कळायै नमः नाभ्यादि दक्षिण पादांतं न्यसॆत्
ॐ ऐं क्लीं सौः ऒं ळं असिता कळायै नमः नाभ्यादि वाम पादांतं न्यसॆत्
ॐ ऐं ऒं क्लीं सौः ऒं क्षः अनंत कळायै नमः नाभ्यादि मुखवृत्त पर्यंतं न्यसॆत्

ॐ हं सश्शिवसॊहं हंसहंसाय विद्महॆ परमहंसाय धीमही तन्नॊ हंसः प्रचॊदयात्

इति हंस कळान्यासं संपूर्णम्

## अथ पूजा विधानम्

आचम्य प्रीत्यर्थं शॊडषॊपचार पूजां करिष्यॆ

इति संकल्प्य

कल्लॊलॊल्लसितामृताब्दि लहरी मध्यॆ विराजन्मणि द्वीपॆ
कल्पकवाटि कापरिवृतॆ कादंबवाट्युज्ज्वलॆ
रत्नस्तंभ सहस्र निर्मित सभामध्यॆ विमानॊत्तमॆ
चिंतारत्नविनिर्मितॆ जननि तॆ सिंहासनं भावयॆ

दुर्गॆ कात्यायनी दॆवी शांभवी शंकरप्रियॆ
मया भक्त्यां कृतां पूजां गृहाणत्वं सुरॆश्वरी

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मी नमः ध्यानं समर्पयामि

ऐणां कानलभासुमंडल श्री चक्र मध्य स्थिताम्
बालार्क द्युति भासुरां करतलैः पाशांकुशौ बिभ्रतीम्
चापं बाणमपि प्रसन्न वदनां कौशुंभ वर्णांशुकाम्
त्वां त्वां चंद्रकळावतं समकुटां चारुस्मितां भावये

हिरण्य वर्णां हरिणीं सुवर्ण रजत स्रजाम्
चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मी नमः आवाहनं समर्पयामि

ईशानादि महेश रुद्र शिचिवट् ब्रह्मांड पादोन्नताम्
लक्ष्म्यालंकृत दिव्यरत्न विलसत् सिंहासने सुस्थिरे
ईशद्भक्तितया त्वदीय चरणां भोजार्चिनो वीत्तवान्
इच्छाज्ञानक्रियात्मकासनमुदं दास्यामि ते शांभवी

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्
यस्यां हिरण्यं विंदेयं गामश्वं पुरुषानहम्

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मी नमः

सिंहासनम्

लक्ष्मीज्ञान सुधार्णवजले नापूर्य पात्राघ्र्यकम्
लक्तालंकृत पादपंकजयुगं संक्षाळ्य भक्त्याः पुनः
लक्ष्मिरंजित हेमथामकल शोनापूर्य सीतांबुनाम्
आचम्यार्थमिदं प्रकल्पितमहं गृह्णातुते शांभवी

अश्वपूर्वां रथ मध्यां हस्ति नाद प्रभोधिनीम्
श्रियं देवी मुपह्वये श्रीर्मा देवीजुषताम्

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्म्यै नमः पादयौः पाद्यं पूजयामि

ह्लींकारोद्य सुवर्ण कल्पित कळालंकार सिंहासने
ह्लींकारांत सरस्वती च यमुना गंगा जलैरावृतम्
ह्लींकारादि समस्त शुद्ध कलशै संस्तूयमानं मुदा
ह्लींकारांकित हेमवर्णमहिमा ह्लींकार नादप्रिये

कां सोस्मितां हिरण्य प्राकारां आर्द्रां ज्वलंतीं तृप्तां तर्पयंतीम्
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम्

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मियै नमः

अर्घ्यम्

शुद्धेराचमनीय कंतवजलै र्भक्त्या मयाकल्पितम्
कारुण्यामृत वारिथेतदखिलं संतुष्टये कल्पिताम्
गंगा नर्मद पुण्यतोय विमिलैरानीय भक्त्यापुनः
आचम्यार्थमिदं प्रकल्पित महं गृह्णातु ते शांभवी

चंद्रां प्रभासां यशसा ज्वलंतीं श्रियं लोके देवी जुष्टामुदाराम्
तां पद्मिनीं शरणमहं प्रपद्ये लक्ष्मीर्मेनश्यतां त्वां वृणे

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मी नमः

आचमनम्

गोक्षीरैः मधु शर्करैश्च मिळितं चाज्यनवं निर्मलम्
भक्त्यानीतमिदं मया समस्त शुभगे सन्नारि केळां बुभिः
स्नानार्धंतु ददामिते शुभकरे हेमप्रभाभास्वरम्
वस्त्रं दास्यतुते त्रिलोकजननी गृह्णीष्वमाहेश्वरी

आदित्यवर्णे तपसोदिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः
तस्य फलानि तपसानुदंतु मायांतरायाश्च बाह्या अलक्ष्मीः

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मी नमः

मधुपर्कम्

पंचामृत स्नानम्

लक्ष्मे योगिजनन्य रक्षित जगत्जाले विशालेक्षणे
प्रालेयांबु पटीर कुंकुमलसत्कर्पूर मिश्रोदकैः
गोक्षीरैरपिनारिकेळ सलिलै शुद्धोदकैर्मंत्रितैः
स्नानं देवी विदेहि मंगळ तनुंगांगेय कुंभोद्भवैः

उपैतुमां देवसखः कीर्तिश्च मणिनासह
प्रादुर्भूतोस्मि राष्ट्रेस्मिन् कीर्तिमृद्धिं ददातुमे

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

हंसारूढ तनुप्रकाश सुभगे क्षौमांबरं भक्तितः
हंसस्फाटिक चंद्रिकाभ विमलं दर्वाश तोत्पर्यकम्
कालंकृत देविरक्षणभरामानंद मंदस्मिताम्

विद्यातीत मधातु संतविभवा माराधयाम्यंबिकाम्

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्
अभूतिमसमृद्धिंच सर्वाणिर्नुदमे गृहात्

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

वस्त्रम्

मुक्तासंततियज्ञ सूत्र विमलं माणिक्य तंतूत्भवंम्
नानारत्न विचित्रितं शुभकरं भानुप्रभा भास्वरम्
सर्वालंकृत हेमरत्न चमके माणिक्य पात्रान्विते
सल्लापांचितरत्नपीठ निलये गृह्णातु ते शांभवी

गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मी नमः

कंठाभरणम्

नानारत्नविचित्र हेमरुचिरं माणिक्य रत्नान्वितम्
कांचीनूपुर रत्नमंडित शुभं ग्रैवेयहारान्वितम्

मुक्तासंतति रत्नसूत्र विमलं सूर्यप्रभा शोभितम्
आभरणानि समर्पयामि

सर्वांगे घनसार कुंकुमलसच्श्री गंध पंकांकितम्
कस्तूरितिलकंच फालपलके गोरोचनापत्रके
गंडादर्शन मंडले नयनयोः दिव्यांजनं तेर्पितम्
कंठाब्जे मृगनाभि पंक कमलं त्वत्प्रीतये कल्प्यताम्

मनसः काममाकूतिं वाचः सत्य मशीमही
पशूनां रूपमन्नस्य मयी श्रीः श्रयतां यशः

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मी नमः

श्रीगंधम्

शुद्धमुक्ता फलाभैस्तै रक्षतै शशिवन्निभैः
सर्वांगेच महालक्ष्मीद्योतयामि स्वशक्तितः
देव्यै नमः

अक्षतान्

हरिद्रंच मयानीतं देवी कल्याणदायिनी
सौभाग्यवर्धनं नित्यं गृहाण हरिवल्लभे
हरिप्रियायै नमः

हरिद्रम्

कुंकुमं शोभनं दिव्यं सर्वदा मंगळप्रदम्
मयानीतं महादेवी तुभ्यं दास्यामि सुंदरी
मंगळायै नमः

कुंकुमम्

सिंधूरं शुभदं दिव्यं महाशक्ति प्रियासहा
प्रसादास्य महादेवी सर्व सौभाग्य दायिनी
महादेव्यै नमः

सिंदूरम्

मालती मल्लिकादीनि नवानि कुसुमांच
ऐकनाथे प्रयच्छामि मालांतां प्रतिगृह्यताम्
महालक्ष्मी नमः

पुष्पमालाम्

सुगंधं शीतलं शुभ्रं नानागंध समन्वितम्
प्रीत्यर्थं तव देवेशि त्वामद्य प्रतिगृह्यताम्
सुभगायै नमः

परिमळ द्रव्यम्

उदितार्क समाभासं नानारत्न समन्वितम्
गृहाण देवी सर्वज्ञे तिलकं तिलकप्रिये
रत्नतिलकं समर्पयामि

## अथांगपूजा

ॐ ऐं ह्रीं श्रीं चंचलायै नमः पादौ पूजयामि
ॐ ऐं ह्रीं श्रीं चपलायै नमः गुल्भौ पूजयामि
ॐ ऐं ह्रीं श्रीं कात्यायिन्यै नमः जानुनी पूजयामि
ॐ ऐं ह्रीं श्रीं मंगळायै नमः जंघौ पूजयामि
ॐ ऐं ह्रीं श्रीं भद्रकाळ्यै नमः ऊरूं पूजयामि
ॐ ऐं ह्रीं श्रीं कमलिन्यै नमः कटिं पूजयामि
ॐ ऐं ह्रीं श्रीं शिवायै नमः नाभिं पूजयामि
ॐ ऐं ह्रीं श्रीं कमलायै नमः उदरं पूजयामि
ॐ ऐं ह्रीं श्रीं गौर्यै नमः हृदयं पूजयामि
ॐ ऐं ह्रीं श्रीं सिंहवाहिन्यै नमः स्तनद्वयं पूजयामि
ॐ ऐं ह्रीं श्रीं स्कंदमात्रे नमः भुजद्वयं पूजयामि
ॐ ऐं ह्रीं श्रीं कंबुकंठ्यै नमः कंठं पूजयामि
ॐ ऐं ह्रीं श्रीं सरस्वत्यै नमः मुखं पूजयामि
ॐ ऐं ह्रीं श्रीं सुवासिन्यै नमः नासिकां पूजयामि
ॐ ऐं ह्रीं श्रीं सुवर्णकुंडलायै नमः कर्णद्वयं पूजयामि
ॐ ऐं ह्रीं श्रीं चंडिकायै नमः नेत्रौ पूजयामि
ॐ ऐं ह्रीं श्रीं शिवायै नमः ललाटं पूजयामि
ॐ ऐं ह्रीं श्रीं कुमार्यै नमः शिरं पूजयामि
ॐ ऐं ह्रीं श्रीं स्वरूपायै नमः सर्वाण्यांगानि पूजयामि

## अथ अष्टोत्तर शतनाम पूजां करिष्ये

ॐ ऐं ह्रीं श्रीं रजताचल शृंगाग्र मध्यस्थ्तायै नमो नमः
महादेव्यै नमः

तत अवसर नैवेद्यं कृत्वा
तदुपरि सहस्र नामार्चनं कुर्यात्

हंतारं मदनस्य नंद नधिया स्यांगै रसंगोज्ज्वलैः
या भृंगावळी नीलकुंतल भरै बध्नामितस्याळयम्
तानीमानित वांब कोमलतराण्यामोद लीलागृहा
ण्यामोदाय दशांग गुग्गुल घृतैः धूपैः हंधूपये

आपस्रुजंतु स्निग्धानि चिक्लीत वसमे गृहे
निच देवीं मातरं श्रियं वासय मे कुले

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मियै नमः धूपं समर्पयामि

लक्ष्मीमुज्ज्वलयामि रत्न निवहैर्बादंतुरैर्मंदिरैः
मालारूप विळंबि भिर्मणिमय स्तंभेषु संभावितैः
चित्रैर्हाटक पुत्रिका करथृतैः गव्यैः घृतैः वर्थितैः
दिव्यैः दीपगणैर्थिया गिरिसुते त्वत्प्रीतये कल्प्यताम्

आर्द्रां पुष्करिणीं पुष्टिं पिंगळां पद्ममालिनीम्
चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वाना वेव सिंधुं दुरितात्यग्निः

महालक्ष्मियै नमः

## दीपम्

ह्रींकारेश्वर तप्त हाटकमय स्थाळी सहस्रावृतम्
दिव्यान्नं घृत सूपशाकभरितं चित्रान्नभेदं तथा
दुर्धान्नं दधि शर्कमधुयुतं माणिक्य पात्रे स्थितम्
माषापूप सहस्रमंबसफलं नैवेद्यमावेदये

आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम्
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मियै नमः

महानैवेद्यम्

उत्तरापोषणम्

हस्तप्रक्षाळनम्

पादप्रक्षाळनम्

स्वच्छायैर्नव केतकीदळनिभैः तांबूलवळ्ळीदलैः
पूगैर्भूरिगणै सुगंधमधुरैः कर्पूरखंडोज्ज्वलैः
मुक्ताचूर्णविराजितैर् बहुविदैर् वृक्त्रांबुजामोदकैः
पूर्णारत्न कळाचिकातवमुदे यस्ता पुरस्तादिमे

तां म आवह जातवेदो लक्ष्मी मनपगामिनीम्
यस्यां हिरण्यं प्रभूतं गावो दास्योश्वान विंदेयं पुरुषानहम्

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मियै नमः

तांबूलम्

कन्याभिः कमनीय कांतिभिरलं स्वस्त्रीभि रारार्तिकम्
पात्रैर्मौक्तिक चित्रपंक्ति विलसत्कर्पूर दीपाळिभिः
तत्तत्ताळ मृदंग गीत सहितं नृत्यत्पदांभोरुहम्
मंत्राराधनपूर्वकं सुविहितं नीराजनं गृह्यताम्

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

महालक्ष्मियै नमः

कर्पूर नीराजनम्

जांबूरत्न विचित्र भूषणयुतां कामेश्वरांकस्थिताम्
सल्लापांचित कामुकां रवि निभां कौशुंभवर्णां शुकाम्
मंदारादि समस्त जाजिवकुळैः पुष्पांजलिं तेर्पिताम्
वामां पुष्पमयीं समस्त शुभगां दास्यामि ते शांभवी

आनंदः कर्दमश्चैव चिक्लीत इति विश्रुता
ऋषयस्तेत्रयः पुत्र स्वयं श्रीदेवि देवता
पद्मासने पद्मऊरू पद्माक्षी पद्म संभवे
त्वं मां भजस्व पद्माक्षी येन सौख्यं लभाम्यहम्

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः
सनः परषदति दुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः

[मंत्र पुष्पम्]